नमोवीतरागाय ।

# भाद्रपदपूजा संग्रह ।



संग्रहकर्त्ता—श्री कस्तूरचन्दजी छावड़ा, 'विशारद'

प्रकाशक—सिंघई दुलीचन्द पन्नालाल परवार,
जिनवाणी प्रचारक कार्यालय, पो० व० ६७४८ कलकत्ता ।



१०००प्रति | जून १९२५ | न्यो० दस आना

# विषय सूची ।

श्रीवीतरागाय नमः।

# भाद्रपद पूजा संग्रह



## लघु अभिषेक पाठ।

श्रीमज्जिनेन्द्रमभिवन्द्य जगत्त्रयेशं स्याद्वादनायकमनन्तचतुष्टयार्हम्।
श्रीमूलसंघसुदृशां सुकृतैकहेतुर्जैनेन्द्रयज्ञविधिरेष मयाभ्यधायि ॥ १ ॥

( यह पढ़कर पुष्पाञ्जलि क्षेपण करना )

सौगन्ध्यसंगतमधुव्रतझंकृतेन संवर्ण्यमानमिव गन्धमनिन्द्यमादौ।
आरोपयामि विबुधेश्वरवृन्दवन्द्यपादारविन्दमभिवन्द्य जिनोत्तमानाम् ॥

( यह पढ़कर अपने ललाटादि स्थानोंमें तिलक लगाना चाहिये )

ये सन्ति केचिदिह दिव्यकुलप्रसूता नागाः प्रभूतबलदर्पयुता विबोधाः।
संरक्षणार्थममृतेनशुभेन तेषां प्रक्षालयामि पुरतः स्नपनस्य भूमिम् ॥३॥

( इतना पढ़के अभिषेकके लिये आगेकी भूमिका प्रक्षालन करे )

क्षीरार्णवस्य पयसां शुचिभिः प्रवाहैः प्रक्षालितं सुरवरैर्यदनेकवारम् ।
अत्युद्घमुद्यतमहं जिनपादपीठं प्रक्षालयामि भवसंभवतापहारि ॥ ४ ॥

( सिंहासन अथवा जिस आसनपर विराजमान करके अभिषेक करना हो, उसका प्रक्षालन करके 'श्री' वर्ण लिखना चाहिये )

इन्द्राग्निदण्डधरनैर्ऋतपाशपाणिवायूत्तरेशशशिमौलिफणीन्द्रचन्द्राः ।
आगत्य यूयमिह सानुचराः सचिह्नाः,स्वं स्वं प्रतीच्छत बलिं जिनपाभिषेके

( दूर्वा फूल आदि लेकर दशों दिशाओंमें निम्न लिखित मंत्र पढ़कर दश दिक्पालोंकी स्थापना करना चाहिये )

१ ॐ आं क्रौं ह्रीं इन्द्र आगच्छ आगच्छ, इन्द्राय स्वाहा । २ ॐ अग्ने आगच्छ आगच्छ, अग्नये स्वाहा । ३ ॐ यम आगच्छ आगच्छ, यमाय स्वाहा । ४ ॐ नैर्ऋत आगच्छ आगच्छ, नैर्ऋताय स्वाहा । ५ ॐ वरुण आगच्छ आगच्छ, वरुणाय स्वाहा । ६ ॐ पवन आगच्छ आगच्छ, पवनाय स्वाहा । ७ ॐ कुवेर आगच्छ आगच्छ, कुवेराय स्वाहा । ८ ॐ ऐशान आगच्छ आगच्छ, ऐशानाय स्वाहा । ९ ॐ धरणीन्द्र आगच्छ आगच्छ, धरणीन्द्राय स्वाहा । १० ॐ सोम आगच्छ आगच्छ, सोमाय स्वाहा ।

यः पाण्डुकामलशिलागतमादिदेवमस्नापयन्सुरवराः सुरशैलमूर्ध्नि ।
कल्याणमीप्सुरहमक्षततोयपुष्पैः,संभावयामि पुर एव तदीयबिम्बम् ॥६॥

( जल पुष्प अक्षतादि क्षेपण करके 'श्री' वर्णपर जिनबिम्बकी स्थापना करना चाहिये )

सत्पल्लवार्चितमुखान्कलधौतरूप्यताम्रारकूटघटितान्पयसा सुपूर्णान् ।
संवाह्यतामिव गतांश्चतुरः समुद्रान्,संस्थापयामि कलशान् जिनवेदिकान्ते

( पुष्प अक्षतादि क्षेपण करके वेदीके कोनोंमे चार कलशों की स्थापना करना चाहिये )

आभिः पुण्याभिरद्भिः परिमलबहुलेनामुना चन्दनेन,
श्रीदृक्पेयैरमीभिः शुचिरुदकचयैरुद्गमैरेभिरुद्धैः ।
हृद्यैरेभिर्निवेद्यैर्मखभवनमिमैर्दीपयद्भिः प्रदीपै-
र्धूपैः प्रायोभिरेभिः पृथुभिरपि फलैरेभिरीशं यजामि ॥ ८ ॥

( यह पढ़कर अर्घ चढ़ाना चाहिये )

दूरावनम्रसुरनाथकिरीटकोटीसंलग्नरत्नकिरणच्छविधूसरांघ्रिम् ।
प्रस्वेदतापमलमुक्तमपि प्रकृष्टैर्भक्त्या जलैर्जिनपतिं बहुधाभिषिञ्चे ॥

( शुद्ध जलकी धारा प्रतिमापर छोड़ना चाहिये )

भक्त्या ललाटतटदेशनिवेशितोच्चैर्हस्तैश्च्युता सुरवरासुरमर्त्यनाथैः ।
तत्कालपीलितमहेक्षुरसस्य धारा सद्यः पुनातु जिनबिम्बगतैव युष्मान् ॥

( इक्षुरसकी धारा )

उत्कृष्टवर्णनवहेमरसाभिरामदेहप्रभावलयसंगमलुप्तदीप्तिम् ।
धारां घृतस्य शुभगन्धगुणानुमेयां वन्देऽर्हतां सुरभिसंस्नपनोपयुक्ताम् ॥

( घृतरसकी धारा० )

संपूर्णशारदशशाङ्कमरीचिजालस्यन्दैरिवात्मयशसामिव सुप्रवाहैः ।
क्षीरैर्जिनाः शुचितरैरभिषिच्यमानाः संपादयन्तु मम चित्तसमीहितानि

( दुग्धरसकी धारा० )

दुग्धाब्धिवीचिपयसां चितफेनराशिपाण्डुत्वकान्तिमवधारयतामतीव ।
दध्नां गता जिनपतेः प्रतिमां सुधारा संपद्यतां सपदि वाञ्छितसिद्धये वः

( दहीकी धारा० )

संस्नापितस्य घृतदुग्धदधीक्षुवाहैः सर्वाभिरौषधिभिरर्हतमुज्ज्वलाभिः ।
उद्वर्तितस्य विदधाम्यभिषेकमेलाकालेयकुंकुमरसोत्कटवारिपूरैः ॥ १४ ॥

( सर्वौषधिरसकी धारा० )

इष्टैर्मनोरथशतैरिव भव्यपुंसां पूर्णैः सुवर्णकलशैर्निखलैर्वसानैः ।
संसारसागरविलङ्घनहेतुसेतुमाप्लावये त्रिभुवनैकपतिं जिनेन्द्रम् ॥१५॥

( कलशोंसे अभिषेक )

द्रव्यैरनल्पघनसारचतुःसमाद्यैरामोदवासितसमस्तदिगन्तरालैः ।
मिश्रीकृतेन पयसा जिनपुङ्गवानां त्रैलोक्यपावनमहं स्नपनं करोमि ॥१६॥

( सुगंधित जलकी धारा० )

मुक्तिश्रीवनिताकरोदकमिदं पुण्यांकुरोत्पादकम्,
नागेन्द्रत्रिदशेन्द्रचक्रपदवीराज्याभिषेकोदकम् ।
सम्यग्ज्ञानचरित्रदर्शनलतासंवृद्धिसंपादकम् ।
कीर्तिश्रीजयसाधकं तव जिनस्नानस्य गन्धोदकम् ॥ १७ ॥

( यह श्लोक पढकर गन्धोदक लेकर मस्तकपर लगाना चाहिये )

# देवशास्त्रगुरुपूजा ।

ॐ जय जय जय । नमोऽस्तु नमोऽस्तु नमोऽस्तु ।
णमो अरिहंताणं, णमो सिद्धाणं, णमो आयरियाणं ।
णमो उवज्झायाणं, णमो लोए सव्वसाहूणं ॥

ॐ अनादिमूलमन्त्रेभ्यो नमः ।

( यहां पुष्पाञ्जलि क्षेपण करना चाहिये )

चत्तारि मंगलं—अरिहंत मंगलं, सिद्ध मंगलं, साहू मंगलं, केवलिपणत्तो धम्मो मंगलं । चत्तारि लोगुत्तमा—अरिहंत लोगुत्तमा, सिद्ध लोगुत्तमा, साहू लोगुत्तमा, केवलिपणत्तो धम्मो लोगुत्तमा । चत्तारि सरणं पव्वज्जामि--अरिहंत सरणं पव्वज्जामि, सिद्ध सरणं पव्वज्जामि साहू सरणं पव्वज्जामि, केवलिपणत्तो धम्मो सरणं पव्वज्जामि ॥

ॐ नमोऽर्हते स्वाहा ।

( यहाँ पुष्पांजलि क्षेपण करना चाहिये )

अपवित्रः पवित्रो वा सुस्थितो दुःस्थितोऽपि वा ।
ध्यायेत्पञ्चनमस्कारं सर्वपापैः प्रमुच्यते ॥ १ ॥
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्परमात्मानं स बाह्याभ्यन्तरे शुचिः ॥ २ ॥
अपराजितमन्त्रोऽयं सर्वविघ्नविनाशनः ।
मङ्गलेषु च सर्वेषु प्रथमं मङ्गलं मतः ॥ ३ ॥
एसो पंचणमोयारो सव्वपावप्पणासणो ।
मंगलाणं च सव्वेसिं, पढमं होइ मंगलं ॥ ४ ॥
अर्हमित्यक्षरं ब्रह्म वाचकं परमेष्ठिनः ।
सिद्धचक्रस्य सद्बीजं सर्वतः प्रणमाम्यहम् ॥ ५ ॥
कर्माष्टकविनिर्मुक्तं मोक्षलक्ष्मीनिकेतनम् ।

सम्यक्त्वादिगुणोपेतं सिद्धचक्रं नमाम्यहम् ॥ ६ ॥

( यहां पुष्पांजलि क्षेपण करना चाहिये )

( यदि समय हो तो यहां पर सहस्र नाम पढ़कर दश अर्घ देना चाहिये, नहीं तो नीचे लिखा श्लोक पढ़कर एक अर्घ चढ़ाना चाहिये ।

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः ।
धवलमङ्गलगानरवाकुले जिनगृहे जिननाथमहं यजे ॥ ७ ॥

ॐ श्रीभगवज्जिनसहस्रनामेभ्योऽर्घं निर्वपामीति स्वाहा ॥

श्रीमज्जिनेन्द्रमभिवन्द्य जगत्त्रयेशंस्याद्वादनायकमनन्तचतुष्टयार्हम् ।
श्रीमूलसंघसुदृशां सुकृतैकहेतुर्जैनेन्द्रयज्ञविधिरेष मयाऽभिधायि ॥८॥
स्वस्ति त्रिलोकगुरवे जिनपुङ्गवाय स्वस्ति स्वभावमहिमोदयसुस्थिताय ।
स्वस्ति प्रकाशसहजोर्जितदृङ्मयाय स्वस्ति प्रसन्नललिताद्भुतवैभवाय॥
स्वस्त्युच्छलद्विमलबोधसुधाप्लवाय स्वस्ति स्वभावपरभावविभासकाय ।
स्वस्ति त्रिलोकविततैकचिदुद्गमाय स्वस्ति त्रिकालसकलायतविस्तृताय॥

द्रव्यस्य शुद्धिमधिगम्य यथानुरूपं भावस्य शुद्धिमधिकामधिगन्तुकामः ।
आलम्बनानि विविधान्यवलम्ब्य वल्गन् भूतार्थयज्ञपुरुषस्य करोमि यज्ञम्
अर्हत्पुराणपुरुषोत्तमपावनानि वस्तूनि नूनमखिलान्ययमेक एव ।
अस्मिन् ज्वलद्विमलकेवलबोधवह्नौ पुण्यं समग्रमहमेकमना जुहोमि॥१२॥

( पुष्पांजलि क्षेपण करना )

श्रीवृषभो नः स्वस्ति, स्वस्ति श्रीअजितः । श्रीसंभवः स्वस्ति, स्वस्ति श्रीअभिनन्दनः, श्रीसुमतिः स्वस्ति, स्वस्ति श्रीपद्मप्रभः । श्रीसुपार्श्वः स्वस्ति, स्वस्ति श्रीचन्द्रप्रभः । श्रीपुष्पदन्तः स्वस्ति, स्वस्ति श्रीशीतलः । श्रीश्रेयान्स्वस्ति, स्वस्ति श्रीवासुपूज्यः । श्रीविमलः स्वस्ति, स्वस्ति श्रीअनन्तः । श्रीधर्मः स्वस्ति,स्वस्ति श्रीशान्तिः । श्रीकुन्थुः स्वस्ति, स्वस्ति श्रीअरनाथः । श्रीमल्लिः स्वस्ति, स्वस्ति श्रीमुनिसुव्रतः । श्रीनमिः स्वस्ति, स्वस्ति श्रीनेमिनाथः । श्रीपार्श्वः स्वस्ति, स्वस्ति

श्रीवर्द्धमानः । ( पुष्पांजलिक्षेपण )

नित्याप्रकम्पाद्भुतकेवलौघाः स्फुरन्मनः पर्य्ययशुद्धबोधाः ।
दिव्यावधिज्ञानबलप्रबोधाः स्वस्ति क्रियासुः परमर्षयो नः ॥ १ ॥
( पुष्पांजलि क्षेपण ) १*

कोष्ठस्थधान्योपममेकबीजं, संभिन्नसंश्रोत्रपदानुसारि ।
चतुर्विधं बुद्धिबलं दधानाः स्वस्ति क्रियासुः परमर्षयो नः ॥ २ ॥
संस्पर्शनं संश्रवणं च दूरादास्वादनघ्राणविलोकनानि ।
दिव्यान्मतिज्ञानबलाद्वहन्तः स्वस्ति क्रियासुः परमर्षयो नः ॥ ३ ॥
प्रज्ञाप्रधानाः श्रवणाः समृद्धाः प्रत्येकबुद्धा दशसर्वपूर्वैः ।
प्रवादिनोऽष्टाङ्गनिमित्तविज्ञाः स्वस्ति क्रियासुः परमर्षयो नः ॥४॥
जङ्घावलिश्रेणिफलाम्बुतन्तुप्रसूनबीजांकुरचारणाह्वाः ।
नभोऽङ्गणस्वैरविहारिणश्च स्वस्ति क्रियासुः परमर्षयो नः ॥ ५ ॥

१ प्रत्येक श्लोकके अखीरमें पुष्पांजलि क्षेपण करना चाहिये ।

अणिम्नि दक्षाः कुशला महिम्नि लघिम्नि शक्ताः कृतिनो गरिम्णि
मनोवपुर्वाग्बलिनश्च नित्यं स्वस्ति क्रियासुः परमर्षयो नः ॥ ६ ॥
सकामरूपित्ववशित्वमैश्यं प्राकाम्यमन्तर्द्धिमथाप्तिमाप्ताः ।
तथाऽप्रतीघातगुणप्रधानाः स्वस्ति क्रियासुः परमर्षयो नः ॥ ७ ॥
दीप्तं च तप्तं च तथा महोग्रं घोरं तपो घोरपराक्रमस्था ।
ब्रह्मापरं घोरगुणाश्चरन्तः स्वस्ति क्रियासुः परमर्षयो नः ॥ ८ ॥
आमर्षसर्वौषधयस्तथाशीविषंविषा दृष्टिविषंविषाश्च ।
सखिल्लविड्जल्लमलौषधीशाः स्वस्ति क्रियासुः परमर्षयो नः ॥ ९ ॥
क्षीरं स्रवन्तोऽत्र घृतं स्रवन्तो मधु स्रवन्तोऽप्यमृतं स्रवन्तः ।
अक्षीणसंवासमहनसाश्च स्वस्ति क्रियासुः परमर्षयो नः ॥ १० ॥

इति स्वस्ति मङ्गलविधानं ।

सार्वः सर्वज्ञनाथः सकलतनुभृतां पापसन्तापहर्ता

त्रैलोक्याक्रान्तकीर्तिः क्षतमदनरिपुर्घातिकर्मप्रणाशः
श्रीमान्निर्वाणसम्पद्वरयुवतिकरालीढकण्ठैः सुकंठै-
र्देवेन्द्रैर्वन्द्यपादो जयति जिनपतिः प्राप्तकल्याणपूजाः ॥ १ ॥

जय जय जय श्रीसत्कान्तिप्रभो जगतां पते
जय जय भवानेव स्वामी भवाम्भसि मज्जताम् ।
जय जय महामोहध्वान्तप्रभातकृतेऽर्चनं
जय जय जिनेश त्वं नाथ प्रसीद करोम्यहम् ॥ २ ॥

ॐ ह्रीं भगवज्जिनेन्द्र ! अत्र अवतर अवतर । संवौषट् । अत्र तिष्ठ तिष्ठ । ठ ठः । अत्र मम सन्निहितो भव भव वषट् ।

देवि श्री श्रुतदेवते भगवति त्वत्पादपंकेरुह-
द्वन्द्वे यामि शिलीमुखत्वमपरं भक्त्या मया प्रार्थ्यते ।
मातश्चेतसि तिष्ठ मे जिनमुखोद्भूते सदा त्राहि मां
दृग्दानेन मयि प्रसीद भवतीं सम्पूजयामोऽधुना ॥ ३ ॥

ॐ ह्रीं जिनमुखोद्भूतद्वादशाङ्गश्रुतज्ञान ! अत्र अवतर अवतर । संवौषट् ।

ॐ ह्रीं जिनमुखोद्भूतद्वादशाङ्गश्रुतज्ञान ! अत्र तिष्ठ तिष्ठ । ठः ठः ।

ॐ ह्रीं जिनमुखोद्भूतद्वादशाङ्गश्रुतज्ञान ! अत्र मम सन्निहितो भव भव । वषट् ।

संपूजयामि पूज्यस्य पादपद्मयुगं गुरोः ।
तपः प्राप्तप्रतिष्ठस्य गरिष्ठस्य महात्मनः ॥ ४ ॥

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुसमूह ! अत्र अवतर अवतर । संवौषट् ।

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुसमूह ! अत्र तिष्ठ तिष्ठ । ठः ठः ।

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुसमूह ! अत्र मम सन्निहितो भव भव । वषट् ।

देवेन्द्रनागेन्द्रनरेन्द्रवन्द्यान् शुम्भत्पदान् शोभितसारवर्णान् ।
दुग्धाब्धिसंस्पर्धिगुणैर्जलौघैर्जिनेन्द्रसिद्धान्तयतीन्यजेऽहम् ॥ १ ॥

ॐ ह्रीं परब्रह्मणेऽनन्तानन्तज्ञानशक्तये अष्टादशदोषरहिताय षट्चत्वारिंशद्गुणसहिताय अर्हत्परमेष्ठिने जन्ममृत्युविनाशनाय जलं निर्वपामीति स्वाहा ।

ॐ ह्रीं जिनमुखोद्भूतस्याद्वादनयगर्भितद्वादशाङ्गश्रुतज्ञानाय जन्ममृत्युविनाशनाय जलं निर्वपामीति स्वाहा ।

ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचार्योपाध्यायसर्वसाधुभ्यो जन्ममृत्युविनाशनाय जलं निर्वपामीति स्वाहा ।

ताम्यत्त्रिलोकोदरमध्यवर्तिसमस्तसत्वाऽहितहारिवाक्यान् ।
श्रीचन्दनैर्गन्धविलुब्धभृङ्गैर्जिनेन्द्रसिद्धान्तयतीन् यजेऽहम् ॥ २ ॥

ॐ ह्रीं संसारतापविनाशनाय चन्दनं समर्पयामीति स्वाहा ।

अपारसंसारमहासमुद्रप्रोत्तारणे प्राज्यतरीन् सुभक्त्या ।
दीर्घाक्षतांगैर्धवलाक्षतौघैर्जिनेन्द्रसिद्धान्तयतीन्यजेऽहम् ॥ ३ ॥

ॐ ह्रीं अक्षयपदप्राप्तये अक्षतान् निर्वपामीति स्वाहा ।

विनीतभव्याब्जविबोधसूर्य्यान्वर्यान् सुचर्य्याकथनैकधुर्य्यान् ।
कुन्दारविन्दप्रमुखैः प्रसूनैर्जिनेन्द्रसिद्धान्तयतीन् यजेऽहम् ॥ ४ ॥

ॐ ह्रीं कामबाणविध्वंसनाय पुष्पं निर्वपामीति स्वाहा ।

कुदर्पकन्दर्पविसर्प्पसर्प्पप्रसह्यनिर्णाशनवैनतेयान् ।
प्राज्याज्यसारैश्चरुभी रसाढ्यैर्जिनेन्द्रसिद्धान्तयतीन्यजेऽहम् ॥ ५ ॥

ॐ ह्रीं क्षुधारोगविनाशनाय नैवेद्यं निर्वपामीति स्वाहा ।

ध्वस्तोद्यमान्धीकृतविश्वविश्वमोहान्धकारप्रतिघातिदीपान् ।
दीपैः कनत्काञ्चनभाजनस्थैर्जिनेन्द्रसिद्धान्तयतीन् यजेऽहम् ॥६॥

ॐ ह्रीं मोहान्धकारविनाशनाय दीपं निर्वपामीति स्वाहा ।

दुष्टाष्टकर्मेन्धनपुष्टजालसंधूपने भासुरधूमकेतून ।
धूपैर्विधूतान्यसुगन्धगन्धैर्जिनेन्द्रसिद्धान्तयतीन् यजेऽहम् ॥ ७ ॥

ॐ ह्रीं अष्टकर्मदहनाय धूपं निर्वपामीति स्वाहा ।

क्षुभ्यद्विलुभ्यन्मनसामगम्यान् कुवादिवादाऽस्खलितप्रभावान् ।
फलैरलं मोक्षफलाभिसारैर्जिनेन्द्रसिद्धान्तयतीन् यजेऽहम् ॥ ८ ॥

ॐ ह्रीं मोक्षफलप्राप्तये फलं निर्वपामीति स्वाहा ।

सद्वारिगन्धाक्षतपुष्पजातैर्नैवेद्यदीपामलधूपधूम्रैः ।
फलैर्विचित्रैर्घमपुण्ययोग्यान् जिनेन्द्रसिद्धान्तयतीन् यजेऽहम् ॥९॥

ॐ ह्रीं अनर्घ्यपदप्राप्तये अर्घ्यं निर्वपामीति स्वाहा ।

ये पूजां जिननाथशास्त्रयमिनां भक्त्या सदा कुर्वते,

ये संस्तवं सुविचित्रकाव्यरचनामुच्चारयन्तो नराः ।
पुण्याढ्या मुनिराजकीर्तिसहिता भूत्वा तपोभूषणाः-
स्ते भव्याः सकलावबोधरुचिरां सिद्धिं लभन्ते पराम् ॥१०॥

इत्याशीर्वादः ( पुष्पांजलि क्षेपण ) ।

वृषभोऽजितनामा च संभवश्चाभिनन्दनः ।
सुमतिः पद्मभासश्च सुपार्श्वो जिनसत्तमः ॥ १ ॥
चन्द्राभः पुष्पदन्तश्च शीतलो भगवान्मुनिः ।
श्रेयांश्च वासुपूज्यश्च विमलो विमलद्युतिः ॥ २ ॥
अनन्तो धर्मनामा च शान्तिः कुन्थुर्जिनोत्तमः ।
अरश्च मल्लिनाथश्च सुव्रतो नमितीर्थकृत् ॥ ३ ॥
हरिवंशसमुद्भूतोऽरिष्टनेमिर्जिनेश्वरः ।
ध्वस्तोपसर्गदैत्यारिः पार्श्वो नागेन्द्रपूजितः ॥ ४ ॥

कर्म्माक्रुन्तन्महावीरः सिद्धाथकुलसम्भवः ।
एते सुरासुरौघेण पूजिता विमलत्विषः ॥ ५ ॥
पूजिता भरताद्यैश्च भूपेन्द्रैर्भूरिभूतिभिः ।
चतुर्विधस्य सङ्घस्य शान्तिं कुर्वन्तु शाश्वतीम् ॥ ६ ॥
जिने भक्तिर्जिने भक्तिर्जिने भक्तिः सदाऽस्तु मे ।
सम्यक्त्वमेव संसारवारणं मोक्षकारणम् ॥ ७ ॥

(पुष्पांजलि क्षेपण करना)

श्रुते भक्तिः श्रुते भक्तिः श्रुते भक्तिः सदास्तु मे ।
सज्ज्ञानमेव संसारवारणं मोक्षकारणम् ॥ ८ ॥

(पुष्पांजलि क्षेपण करना)

गुरौ भक्तिर्गुरौ भक्तिर्गुरौ भक्तिः सदास्तु मे ।
चारित्रमेव संसारवारणं मोक्षकारणं ॥ ९ ॥

(पुष्पांजलि क्षेपण करना)

## देवजयमाला ( प्राकृत )।

घत्ता—वत्ताणुट्ठाणे जणधणुदाणे पइपोसिउ तुहु खत्तधरु।
तुहु चरणविहाणे केवलणाणे तुहु परमप्पउ परमपरु॥ १॥
जय रिसह रिसीसर णमियपाय। जय अजिय जियंगमरोसराय।
जय संभव संभवकयविओय। जय अहिणंदण णंदियपओय॥ २॥
जय सुमइ सुमइ सम्मयपयास। जय पउमप्पह पउमाणिवास।
जय जय हि सुपास सुपासगत्त। जय चंदप्पह चन्दाहवत्त॥ ३॥
जय पुप्फयंत दंतंतरंग। जय सीयल सीयलवयणभंग।
जय सेय सेयकिरणोहसुज्ज। जय वासुपुज्ज पुज्जाण पुज्ज॥ ४॥
जय विमल विमलगुणसेढिठाण। जय जय हि अणंताणंतणाण।
जय धम्म धम्मतित्थयर संत। जय संति संति विहियायवत्त॥ ५॥
जय कुंथु कुंथुपहुअंगिसदय। जय अर अर माहर विहियसमय।
जय मल्लि मल्लिआदामगंध। जय मुणिसुव्वय सुव्वयणिबंध॥ ६॥
जय णमि णमियामरणियरसामि। जय णेमि धम्मरहचक्कणेमि।
जय पास पासछिंदणकिवाण। जय वड्ढमाण जसवड्ढमाण॥ ७॥

घत्ता - इह जाणिय णामहिं, दुरियविरामहिं, परहिंविणमिय सुरावलिहिं ।
अणहणहिं अणाइहिं, समियकुवाइहिं, पणमिवि अरहन्तावलिहिं ॥

ॐ ह्रीं वृषभादिमहावीरान्तेभ्यो महार्घ्यं निर्वपामीति स्वाहा ।

## शास्त्र जयमाला ।

संपइ सुहकारण, कम्मवियारण, भवसमुद्दतारणतरणं ।
जिणवाणि णमस्समि, सत्तपयास्समि, सग्गमोक्खसंगमकरणं ॥ १ ॥
जिणिंदमुहाउ विणिग्गयतार । गणिंदविगुंफियगंथपयार ।
तिलोयहिमंडण धम्महखाणि । सया पणमामि जिणिंदह वाणि ॥ २ ॥
अवग्गहईहअवायजुएहि । सुधारणभेयहिं तिण्णिसएहि ।
मई छत्तीस बहुप्पमुहाणि । सया पणमामि जिणिंदह वाणि ॥ ३ ॥
सुदं पुण दोण्णि अणेयपयार । सुबारहभेय जगत्तयसार ।
सुरिन्दणरिन्दसमच्चिय जाणि । सया पणमामि जिणिंदह वाणि ॥ ४ ॥
जिणिंदगणिंदणरिन्दह रिद्धि । पयासइ पुण्णपुराकिउलद्धि ।
णिउग्गु पहिल्लउ एहु वियाणि । सया पणमामि जिणिंदह वाणि ॥ ५ ॥
जु लोयअलोयह जुत्ति जणेइ । जु तिण्णवि कालसरूव भणेइ ।

चउगइदुक्खजलण दुज्जउ जाणि। सया पणमामि जिणिन्दह वाणि ॥ ६ ॥
जिणिन्दचरित्तविचित्त मुणेइ। सुसावयधम्महिं जुत्ति जणेइ।
णिउगविचित्तउ इत्थु वियाणि। सया पणमामि जिणिन्दह वाणि ॥ ७ ॥
सुजीवअजीवह तच्चह चक्खु। सुपुण्ण विपाव विबंध विमुक्खु।
चउत्थणिओग विभासिय जाणि। सया पणमामि जिणिन्दह वाणि ॥ ८ ॥
तिभेयहिं ओहि विणाण विचित्त। चउत्थ रिजोविउलमइ उत्त।
सुखाइय केवलणाण वियाणि। सया पणमामि जिणिन्दह वाणि ॥ ९ ॥
जिणिन्दह णाणु जगत्तयभाणु। महातमणासिय सुक्खणिहाणु।
पयच्चहु भत्तिभरेण वियाणि। सया पणमामि जिणिन्दह वाणि ॥ १० ॥
पयाणि सुबारहकोडिसयेण। सुलक्ख तिरासिय जुत्ति भरेण।
सहस्स अठावण पंच वियाणि। सया पणमामि जिणिन्दह वाणि ॥ ११ ॥
इकावण कोडिउ लक्ख अठेव। सहस चुलसी दुसया छणो य।
सड्ढाइगवीसह गंथ पयाणि। सया पणमामि जिणिन्दह वाणि ॥ १२ ॥
इह जिणवरवाणि विसुद्धमई। जो भवियण णियमण धरई।
सो सुरणरिन्दसंपय लहई। केवलणाण वि उत्तरई ॥ १३ ॥
ॐ ह्रीं जिनमुखोद्भूतस्याद्वादनयगर्भितद्वादशाङ्गश्रुतज्ञानाय अर्घ्यं निर्वपामीति स्वाहा।

भवियहभवतारण, सोलह कारण, अज्जवितित्थयरत्तणहं ।
तव कम्म असंगइ दयधम्मंगइ पालवि पंच महाव्वयहं ॥ १ ॥
वंदामि महारिसि सीलवंत । पंचिंदियसंजमजोगजुत्त ।
जे ग्यारह अंगह अणुसरन्ति । जे चउदहपुव्वह मुणि थुणन्ति ॥ २ ॥
पादाणुसार वर कुट्ठबुद्धि । उप्पण्णजोह आयासरिद्धि ।
जे पाणाहारो तोरणीय । जे रुक्खमूल आतावणीय ॥ ३ ॥
जे मोणिधाय चन्द्रायणीय । जे जत्थत्थवणि णिवासणीय ।
जे पंचमहव्वय धरणधीर । जे समिदि गुत्ति पालणहि वीर ॥ ४ ॥
जे वड्ढहि देहविरत्तचित्त । जे रायरोस भयमोहचित्त ।
जे कुगइहि संवरु विगयलोह । जे दुरियविणासण कामकोह ॥ ५ ॥
जे जल्लमल्ल तिणलित्तगत्त । आरम्भ परिग्गह जे विरत्त ।
जे तिण्णकाल बाहिर गमंति । छट्ठट्ठम दसमउ तउ चरन्ति ॥ ६ ॥
जे इक्कगास दुइगास लिंति । जे णीरसभोयण रइ करंति ।
ते मुणिवर वन्दिउ ठियमसाण । जे कम्म डहइ वरसुक्कझाण ॥ ७ ॥

बारह विह संजम जे धरन्ति। जे चारिउ विकहा परिहरन्ति।
बावीस परीसह जे सहन्ति। संसारमहण्णव ते तरन्ति ॥ ८ ॥
जे धम्मबुद्ध महियल थुणंति। जे काउस्सग्गो णिस गमन्ति।
जे सिद्धिविलासिणि अहिलसन्ति। जे पक्खमास आहार लिंति ॥ ९ ॥
गोदूहण जे वीरासणीय। जे धणुह सेज वज्जासणीय।
जे तवबलेण आयास जन्ति। जे गिरिगुहकंदर विवर थन्ति ॥ १० ॥
जे सत्तुमित्त समभावचित्त। ते मुणिवरवंदिउ दिढचरित्त।
चउवीसह गंथह जे विरत्त। ते मुणिवरवंदिउ जगपवित्त ॥ ११ ॥
जे सुज्झाणिज्झा एकचित्त। वंदामि महारिसि मोक्खपत्त।
रयणत्तयरंजियसुद्धभाव। ते मुणिवर वंदिउ ठिदिसहाव ॥ १२ ॥

घत्ता—जे तपसूरा, संजमधीरा, सिद्धवधूअणुराईया।
रयणत्तयरंजिय, कम्मह गंजिय, ते रिसिवर मउ झाईया ॥ १३ ॥

ॐ ह्रीं सम्यग्दर्शनज्ञानचारित्रादिगुणविराजमानाचार्योपाध्यायसर्वसाधुभ्यो महार्घ्यं।

# देवशास्त्रगुरुकी भाषा पूजा।

अडिल्ल छन्द।

प्रथम देव अरहंत सुश्रुतसिद्धान्त जू।
गुरु निर्ग्रन्थ महन्त मुकतिपुर पन्थ जू॥
तीन रतन जगमाहिं सु ये भवि ध्याइये।
तिनकी भक्ति प्रसाद परम पद पाइये॥ १॥

दोहा—पूजों पद अरहंतके, पूजों गुरुपद सार।
पूजों देवी सरसुता, नितप्रति अष्टप्रकार॥ २॥

ॐ ह्रीं देवशास्त्रगुरुसमूह! अत्र अवतर अवतर। संवौषट्।
ॐ ह्रीं देवशास्त्रगुरुसमूह! अत्र तिष्ठ तिष्ठ। ठः ठः।
ॐ ह्रीं देवशास्त्रगुरुसमूह! अत्र मम सन्निहितो भव भव। वषट्

गीता छन्द।

सुरपति उरगनरनाथ तिनकर, वन्दनीक सुपदप्रभा।

अति शोभनीक सुवरण उज्जल, देख छवि मोहित सभा ॥

वर नीर क्षीरसमुद्रघटभरि, अग्र तसु बहुविधि नचूं ।

अरहंत श्रुतसिद्धांतगुरुनिर्ग्रन्थ नित पूजा रचूं ॥ १ ॥

दोहा—मलिन वस्तु हरलेत सब, जलसुभाव मलछीन ।

जासों पूजों परमपद, देव शास्त्र गुरु तीन ॥ १ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यो जन्मजरामृत्युविनाशनाय जलं निर्वपामीति स्वाहा ।

जे त्रिजग उदरमंझार प्रानी, तपत अति दुद्धर खरे ।

तिन अहितहरन सुवचन जिनके, परम शीतलता भरे ॥

तसु भ्रमरलोभित घ्राण पावन, सरस चन्दन घसि सचूं ।

अरहंतश्रुतसिद्धान्तगुरुनिरग्रन्थ नित पूजा रचूं ॥ २ ॥

दोहा—चन्दन शीतलता करे, तपतवस्तु परवीन ।

जासों पूजों परमपद, देव शास्त्र गुरु तीन ॥ १ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यः संसारतापविनाशनाय चन्दनं निर्वपामीति स्वाहा ॥ २ ॥

यह भवसमुद्र अपार तारणके निमित्त सुविधि ठई।
अति दृढ़ परमपावन जथारथ, भक्ति वर नौका सही॥
उज्जल अखंडित सालि तंदुल,—पुञ्ज धरि त्रयगुण जचूं।
अरहंतश्रुतसिद्धांतगुरुनिरग्रन्थ नित पूजा रचूं॥ ३॥
दोहा—तंदुल सालि सुगन्ध अति, परम अखंडित बीन।
जासों पूजों परम पद, देव शास्त्र गुरु तीन॥ ३॥
ॐ ह्रीं देवशास्त्रगुरुभ्यः अक्षयपद प्राप्तये अक्षतान् निर्वपामीति स्वाहा॥ ३॥
जे विनयवंत सुभव्यउरअंबुजप्रकाशन भान हैं।
जे एकमुखचारित्र भाषत, त्रिजगमाहिं प्रधान हैं॥
लहि कुंदकमलादिक पहुप, भव भव कुवेदनसों बचूं॥
अरहंतश्रुतसिद्धान्तगुरुनिरग्रन्थ नित पूजा रचूं॥ ४॥
दोहा—विविधभांति परिमल सुमन, भ्रमर जास आधीन।
जासों पूजों परमपद, देव शास्त्र गुरु तीन॥ ४॥

ॐ ह्रीं देवशास्त्रगुरुभ्यः कामबाणविध्वंसनाय पुष्पं निर्वपामिति स्वाहा ॥ ४ ॥

अति सबल मदकंदर्प जाको, क्षुधा उरग अमान है।
दुस्सह भयानक तासु नाशनको सु गरुड़समान है ॥
उत्तम छहों रसयुक्त नित नैवेद्य करि घृतमें पचूं।
अरहंतश्रुतसिद्धान्तगुरुनिरग्रंथ नित पूजा रचूं ॥ ५॥

दोहा— नानाविध संयुक्तरस, व्यंजन सरस नवीन।
जासों पूजों परमपद, देव शास्त्र गुरु तीन ॥ ५ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यः क्षुधारोगविनाशाय चरुं निर्वपामिति स्वाहा ॥ ५ ॥

जे त्रिजग उद्यम नाश कीने मोहतिमिर महाबली।
तिहि कर्म घाती ज्ञानदीपप्रकाशजोति प्रभावली ॥
इह भांति दीप प्रजाल कंचनके सुभाजनमें खचूं।
अरहंतश्रुतसिद्धांतगुरुनिरग्रंथ नित पूजा रचूं ॥ ६ ॥

दोहा—स्वपरप्रकाशक जोति अति, दीपक तमकरि हीन।

जासों पूजों परमपद, देव शास्त्र गुरु तीन ॥ ६ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यो मोहान्धकारविनाशनाय दीपं निर्वपामिति स्वाहा ॥ ६ ॥

जो कर्म-ईंधन दहन अग्निसमूह सम उद्धत लसै।
वर धूप तासु सुगन्धिताकरि सकलपरिमलता हंसै॥
इह भांति धूप चढ़ाय नित, भवअनलमाहिं नहीं पचूं।
अरहंत श्रुतसिद्धांत गुरु निरग्रंथ नितपूजा रचूं ॥ ७ ॥

दोहा—अग्निमाहिं परिमल दहन, चंदनादि गुणलीन।
जासों पूजों परम पद, देव शास्त्र गुरु तीन ॥ ७ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यो अष्टकर्मविध्वंसनाय धूपं निर्वपामीति स्वाहा ॥ ७ ॥

लोचन सुरसना घ्रान उर, उत्साहके करतार हैं।
मोपै न उपमा जाय वरणी, सकल फल गुणसार हैं॥
सो फल चढ़ावत अर्थ पूरन, परम अमृतरस सचूं।
अरहंत श्रुत सिद्धांत गुरु निरग्रंथ नितपूजा रचूं ॥ ८ ॥

दोहा—जे प्रधान फल फलविषै, पंचकरणरसलीन ।
जासों पूजों परम पद, देव शास्त्र गुरु तीन ॥ ८ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यो मोक्षफलप्राप्तये फलं निर्वपामीति स्वाहा ॥ ८ ॥

जल परम उज्ज्वल गंध अक्षत, पुष्प चरु दीपक धरूं ।
वर धूप निरमल फल विविध, बहुजनमके पातक हरूं ॥
इहभांति अर्घ चढ़ाय नित भवि, करत शिवपंकति मचूं ।
अरहंत श्रुत सिद्धांत गुरु निरग्रंथ नितपूजा रचूं ॥ ९ ॥

दोहा—वसुविधि अर्घ संजोयकैं, अति उछाह मन कीन ।
जासों पूजों परम पद, देव शास्त्र गुरु तीन ॥ ९ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यो अनर्घपदप्राप्तये अर्घ्यं निर्वपामीति स्वाहा ॥ ९ ॥

जयमाला—

देवशास्त्रगुरु रतन शुभ, तीनरतनकरतार ।
भिन्न भिन्न कहुं आरती, अल्प सुगुणविस्तार ॥ १ ॥

पद्धड़िछन्द ।

घातकर्मकि त्रेसठ प्रकृति नाशि । जीते अष्टादशदोषराशि ।
जे परम सुगुण हैं अनंत धीर । कहवतके छयालिस गुण गम्भीर ॥ २ ॥
शुभ समवसरणशोभा अपार । शत इन्द्र नमत कर सीस धार ।
देवाधिदेव अर्हंत देव । वंदौं मनवचनतनकरि सुसेव ॥ ३ ॥
जिनकी धुनि है ओंकाररूप । निर अक्षरमय महिमा अनूप ।
दशअष्ट महाभाषा समेत । लघुभाषा सात शतक सुचेत ॥ ४ ॥
सो स्याद्वादमय सप्तभङ्ग । गणधर गूंथे बारह सु अङ्ग ।
रवि शशि न हरे सो तम हराय । सो शास्त्र नमौं बहु प्रीति ल्याय ॥ ५ ॥
गुरु आचारज उवझाय साध । तन नगन रतनत्रयनिधि अगाध ।
संसारदेह वैराग धार । निरवांछि तपैं शिवपद निहार ॥ ६ ॥
गुण छत्तीस पच्चिस आठवीस । भवतारनतरन जिहाज ईस ।
गुरुकी महिमा वरनी न जाय । गुरुनाम जपौं मनवचनकाय ॥ ७ ॥

सोरठा—कीजे शक्ति प्रमान, शक्ति विना सरधा धरै ।
'द्यानत' सरधावान, अजर अमरपद भोगवे ॥ ८ ॥

ॐ ह्रीं देवशास्त्रगुरुभ्यो महार्घ्यं निर्वपामीति स्वाहा ।

# बीस तीर्थंकर पूजा ।

दीप अढ़ाई मेरु पन, अब तीर्थंकर बीस ।
तिन सबकी पूजा करूं, मन वच तन धरि सीस ॥ १ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करा ! अत्र अवतर अवतर संवौषट् ।
ॐ ह्रीं विद्यमानविंशतितीर्थङ्करा ! अत्र तिष्ठत तिष्ठत ठः ठः ।
ॐ ह्रीं विद्यमानविंशतितीर्थङ्करा ! अत्र मम सन्निहिता भवत भवत । वषट् ।

इंद्रफणींद्रनरेंद्रवंद्य, पद निर्मलधारी ।
शोभनीक संसार, सार गुण हैं अविकारी ॥
क्षीरोदधिसम नीरसों ( हो ), पूजों तृषा निवार ॥
सीमंधर जिन आदि दे, बीस विदेहमंझार ॥
श्रीजिनराज हो भव, तारणतरणजिहाज ॥ १ ॥

( सूचना—जिस भाईको निराकुलता और स्थिरता हो; वह बीस तीर्थङ्करोंकी भावपूजा करे । यदि स्थिरता न हो, तो आगे में जो अर्घ लिखा है उसे पढ़कर अर्घ चढ़ावे । )

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्यो जन्ममृत्युविनाशनाय जलं निर्वपामीति स्वाहा ॥

तीनलोकके जीव, पाप आताप सताये ।

तिनको साता-दाता, शीतल बचन सुहाये ॥

बावन चंदनसों जजूं (हो); भ्रमनतपननिरवार । सीमं० ॥ २ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्यो भवतापविनाशनाय चन्दनं निर्वपामीति स्वाहा ॥२॥

यह संसार अपार महासागर जिनस्वामी ।

तातैं तारै बड़ी भक्ति नौका जग-नामी ॥

तंदुल अमल सुगंधसों (हो), पूजों तुम गुण सार। सीमं० ॥ ३ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्यो अक्षयपदप्राप्तये अक्षतान् निर्व० ॥ ३ ॥

भविक-सरोज- विकाश, निंद्यतमहर रविसे हो ।

जति श्रावकआचार कथनको, तुम्हीं बड़े हो ॥

फूलसुवास अनेकसों (हो), पूजों मदनप्रहार । सीमं० ॥ ४ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्यः कामबाणविध्वंसनाय पुष्पं निर्व० ॥ ४ ॥

कामनाग विषधाग,—नाशको गरुड़ कहे हो।

छुधा महादवज्वाल, तासुको मेघ लहे हो॥

नेवज बहुघृत मिष्टसों (हो), पूजों भूख-विडार। सीमं० ॥ ५ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्यः क्षुधारोगविनाशनाय नैवेद्यं निर्व० ॥ ५ ॥

उद्यम होन न देत, सर्व जगमाहिं भर्‍यौ है।

मोह महातम घोर, नाश परकाश कर्‍यौ है॥

पूजों दीपप्रकाशसों (हो), ज्ञानज्योतिकरतार। सीमं ॥ ६ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्यो मोहान्धकारविनाशनाय दीपं निर्व० ॥ ६ ॥

कर्म आठ सब काठ,—भार विस्तार निहारा।

ध्यान अगनिकर प्रगट, सरव कीनों निरवारा॥

धूप अनूपम खेवतें (हो), दुःख जलै निरधार॥ सीमं० ॥ ७ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्योऽष्टकर्मविध्वंसनाय धूपं निर्वपामीति स्वाहा ॥७॥

मिथ्यावादी दुष्ट, लोभऽहंकार भरे हैं।

सबको छिनमें जीत, जैनके मेर खरे हैं ॥

फल अति उत्तमसों जजों (हो), वांछितफलदातार । सीमं० ॥८॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्यो मोक्षफलप्राप्तये फलं निर्वपामीति स्वाहा ।

जल फल आठों दर्व, अरघ कर प्रीत धरी है ।

गणधर इन्द्रनिहूतैं, थुति पूरी न करी है ।

'द्यानत' सेवक जानके (हो), जगतैं लेहु निकार । सीमं० ॥९॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्योऽनर्घपदप्राप्तये अर्घ्यं निर्वपामीति स्वाहा ।

## जयमाला ।

सोरठा—ज्ञानसुधाकर चन्द, भविकखेतहित मेघ हो ।

भ्रम-तम-भान अमंद, तीर्थङ्कर बीसों नमों ॥ १ ॥

## चौपाई ।

सीमंधर सीमन्धर स्वामी । जुगमन्धर जुगमन्धर नामी ।

बाहु बाहु जिन जगजन तारे । करम सुबाहु बाहुबल दारे ॥ २ ॥

जात सुजात केवलज्ञानं । स्वयप्रभू प्रभु स्वयं प्रधानं ।
ऋषभानन ऋषि भानन दोषं । अनन्त वीरज वीरजकोषं ॥ २ ॥
सौरीप्रभ सौरीगुणमालं । सुगुण विशाल विशाल दयालं ।
वज्रधार भवगिरिवज्जर हैं । चन्द्रानन चन्द्रानन वर हैं ॥ ३ ॥
भद्रबाहु भद्रनिके करता । श्रीभुजङ्ग भुजङ्गम भरता ।
ईश्वर सबके ईश्वर छाजैं । नेमिप्रभू जस नेमि विराजैं ॥ ४ ॥
वीरसेन वीरं जग जानै । महाभद्र महाभद्र बखानै ।
नमों जसोधर जसधरकारी । नमों अजितवीरज बलधारी ॥ ५ ॥
धनुष पांचसै काय विराजै आयु कोडिपूरव सब छाजै ।
समवसरणशोभित जिनराजा । भवजलतारनतरन जिहाजा ॥ ६ ॥
सम्यक रतनत्रयनिधि दानी । लोकालोकप्रकाशक ज्ञानी ।
शत इन्द्रनिकरि वन्दित सोहैं । सुरनर पशु सबके मन मोहैं ॥ ७॥

दोहा—तुमको पूजैं वंदना, करैं धन्य नर सोय ।
'द्यानत' सरधा मन धरैं, सो भी धरमी होय ॥ ८ ॥

ॐ ह्रीं विद्यमानविंशतितीर्थङ्करेभ्योऽर्घ्यं निर्वपामीति स्वाहा ।

## विद्यमान बीस तीर्थङ्करोंका अर्घ्य।

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः।
धवलमङ्गलगानरवाकुले जिनगृहे जिनराजमहं यजे॥ १ ॥

ॐ ह्रीं सीमंधरयुगमंधरबाहुसुबाहुसंजातस्वयंप्रभऋषभाननअनन्तवीर्यसूरप्रभविशालकीर्ति-वज्रधरचन्द्राननचन्द्रबाहुभुजङ्गमईश्वरनेमिप्रभवीरसेनमहाभद्रदेवयशअजितवीर्येति विंशतिविद्यमानतीर्थङ्करेभ्योऽर्घ्यं निर्वपामीति स्वाहा ॥१॥

## अकृत्रिम चैत्यालयोंका अर्घ्य।

कृत्याऽकृत्रिमचारुचैत्यनिलयान्नित्यं त्रिलोकीगतान्
वन्दे भावनव्यन्तरान्द्युतिवरान्कल्पामरान्सर्वगान्।
सद्गन्धाक्षतपुष्पदामचरुकैर्दीपैश्च धूपैः फलै-
र्नीराद्यैश्च यजे प्रणम्य शिरसा दुष्कर्मणां शान्तये॥ १ ॥

ॐ ह्रीं कृत्रिमाकृत्रिमचैत्यालयसम्बन्धिजिनबिम्बेभ्योऽर्घ्यं निर्वपामीति स्वाहा।

वर्षेषु वर्षान्तरपर्वतेषु नन्दीश्वरे यानि च मन्दरेषु।

यावन्ति चैत्यायतनानि लोके सर्वाणि वन्दे जिनपुङ्गवानाम् ॥ १ ॥

अवनितलगतानां कृत्रिमाऽकृत्रिमाणां
वनभवनगतानां दिव्यवैमानिकानाम् ।
इह मनुजकृतानां देवराजार्चितानां
जिनवरनिलयानां भावतोऽहंस्मरामि ॥ २॥

जम्बूधातकिपुष्करार्द्धवसुधाक्षेत्रत्रये ये भवा-
श्चन्द्राम्भोजशिखण्डिकण्ठकनकप्रावृड्घनाभाजिनः ।
सम्यग्ज्ञानचरित्रलक्षणधरा दग्धाष्टकर्मेन्धना
भूतानागतवर्त्तमानसमये तेभ्यो जिनेभ्यो नमः ॥ ३ ॥

श्रीमन्मेरौ कुलाद्रौ रजतगिरिवरे शाल्मलौ जम्बुवृक्षे
वक्षारे चैत्यवृक्षे रतिकररुचिके कुण्डले मानुषांके ।
इष्वाकारेऽञ्जनाद्रौ दधिमुखशिखरे व्यन्तरे स्वर्गलोके

ज्योतिर्लोकेऽभिवन्दे भुवनमहितले यानि चैत्यालयानि ॥४॥

द्वौ कुन्देन्दुतुषारहारधवलौ द्वाविन्द्रनीलप्रभौ
द्वौ बन्धूकसमप्रभौ जिनवृषौ द्वौ च प्रियंगुप्रभौ ।
शेषाः षोड़शजन्ममृत्युरहिताः सन्तप्तहेमप्रभा-
स्ते सज्ज्ञानदिवाकराः सुरनुताः सिद्धिं प्रयच्छन्तु नः ॥ ५ ॥

ॐ ह्रीं त्रिलोकसम्बन्धिअकृत्रिमचैत्यालयेभ्यो अर्घ्यं निर्वपामि ॥

इच्छामिभंते—चेइयभत्ति काओसग्गो कओ तस्सालोचेओ अह-लोय तिरियलोय उड्ढलोयम्मि किट्टिमाकिट्टिमाणि जाणि जिणचेइ-याणि ताणि सव्वाणि । तीसुवि लोएसु भवणवासियवाणविंतरजोय-सियकप्पवासियत्ति चउविहा देवा सपरिवारा दिव्वेण गन्धेण दिव्वेण पुप्फेण दिव्वेण धुव्वेण दिव्वेण चुण्णेण दिव्वेण वासेण दिव्वेणहाणेण णिच्चकालं अच्चन्ति पुज्जंति वंदंति णमस्संति । अहमवि इह संतो तत्थ

संताइ णिच्चकालं अच्चेमि पुज्जेमि वंदामि णमस्सामि दुक्खक्खओ कम्मक्खओ बोहिलाहो सुगइगमणं समाहिमरणं जिणगुणसंपत्ति होउ मज्झं । ( इत्याशीर्वादः । परिपुष्पांजलिंक्षिपेत् )

अथ पौर्वाह्निकमाध्याह्निकआपराह्निकदेववंदनायां पूर्वाचार्यानुक्रमेण सकलकर्मक्षयार्थं भावपूजावन्दनास्तवसमेतं श्रीपञ्चमहागुरुभक्तिकायोत्सर्गं करोम्यहम् ।

( कायोत्सर्ग करना और नीचे लिखे मन्त्रका नव वार जाप करना )

णमो अरहंताणं, णमो सिद्धाणं णमो आयरीयाणं ।
णमो उवज्झायाणं, णमो लोए सव्वसाहूणं ॥ १ ॥
ताव कायं पावकम्मं दुच्चरियं वोस्सरामि ।

---

# सिद्धपूजा ।

उर्द्धाधो रयुतं सविन्दुसपरं ब्रह्मस्वरावेष्टितं
वर्गापूरितदिग्गताम्बुजदलं तत्सन्धितत्त्वान्वितम् ।
अन्तःपत्रतटेष्वनाहतयुतं ह्रींकारसंवेष्टितं
देवं ध्यायति यः स मुक्तिसुभगो वैरीभकण्ठीरवः

ॐ ह्रीं श्रीसिद्धचक्राधिपते ! सिद्धपरमेष्ठिन् अत्र अवतर अवतर । संवौषट् ।

ॐ ह्रीं सिद्धचक्राधिपते ! सिद्धपरमेष्ठिन् अत्र तिष्ठ तिष्ठ । ठः ठः ।

ॐ ह्रीं सिद्धचक्राधिपते ! सिद्धपरमेष्ठिन् अत्र मम सन्निहितो भव भव । वषट् ।

निरस्तकर्मसम्बन्धं सूक्ष्मं नित्यं निरामयम् ॥
वन्देऽहं परमात्मानममूर्त्तमनुपद्रवम् ॥ १ ॥

( सिद्धयन्त्रकी स्थापना )

सिद्धौ निवासमनुगं परमात्मगम्यं हीनादिभावरहितं भववीतकायम् ।
रेवापगावरसरो-यमुनोद्भवानां नीरैर्यजे कलशगैर्वरसिद्धचक्रम् ॥ १ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने जन्मजरामृत्युविनाशनाय जलं निर्वपामीति स्वाहा ।

आनन्दकन्दजनकं घनकर्ममुक्तं सम्यक्त्वशर्मगरिमं जननार्तिवीतम् ।
सौरभ्यवासितभुवं हरिचन्दनानां गन्धैर्यजे परिमलैर्वरसिद्धचक्रम् ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने संसारतापविनाशनाय चन्दनं निर्व० ॥

सर्वावगाहनगुणं सुसमाधिनिष्ठं सिद्धं स्वरूपनिपुणं कमलं विशालम् ।
सौगन्ध्यशालिवनशालिवराक्षतानां पुञ्जैर्यजे शशिनिभैर्वरसिद्धचक्रम् ॥२॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने अक्षयपदप्राप्तये अक्षतान् निर्व० ॥ ३ ॥

नित्यं स्वदेहपरिमाणमनादिसंज्ञं द्रव्यानपेक्षममृतं मरणाद्यतीतम् ।
मन्दारकुन्दकमलादिवनस्पतीनां पुष्पैर्यजे शुभतमैर्वरसिद्धचक्रम् ॥ ४ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने कामबाणविध्वंसनाय पुष्पं निर्व० ॥ ४ ॥

ऊर्ध्वस्वभावगमनं सुमनोव्यपेतं ब्रह्मादिबीजसहितं गगनावभासम् ।
क्षीरान्नसाज्यवटके रसपूर्णगर्भे नित्यं यजे चरुवरैर्वरसिद्धचक्रम् ॥ ५ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने क्षुधारोगविध्वंसनाय नैवेद्यं निर्व० ॥५॥

आतङ्कशोकभयरोगमदप्रशान्तंनिर्द्वन्द्वभावधरणं महिमानिवेशम् ।
कर्पूरवर्तिबहुभिः कनकावदातैर्दीपैर्यजे रुचिवरैर्वरसिद्धचक्रम् ॥ ६ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने मोहान्धकार विनाशनाय दीपं निर्व० ॥ ६ ॥

पश्यन्समस्तभुवनं युगपन्नितान्तं त्रैकाल्यवस्तुविषये निबिडप्रदीपम् ।
सद्द्रव्यगन्धघनसारविमिश्रितानां धूपैर्यजे परिमलैर्वरसिद्धचक्रम् ॥७॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने अष्टकर्मदहनाय धूपं निर्वपामोति स्वाहा ॥ ७ ॥

सिद्धासुराधिपतियक्षनरेन्द्रचक्रैर्ध्येयं शिवं सकलभव्यजनैः सुवन्द्यम् ।
नारिङ्गपूगकदलीफलनारिकेलैः सोऽहं यजे वरफलैर्वरसिद्धचक्रम् ॥८॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने मोक्षफलप्राप्तये फलं निर्वपामोति स्वाहा ॥ ८ ॥

गन्धाढ्यं सुपयो मधुव्रतगणैःसंगं वरं चन्दनं
पुष्पौघं विमलं सदक्षतचयं रम्यं चरुं दीपकम् ।
धूपं गन्धयुतं ददामि विविधं श्रेष्ठं फलं लब्धये
सिद्धानां युगपत्क्रमाय विमलं सेनोत्तरं वाञ्छितम् ॥ ६ ॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्धपरमेष्ठिने अनर्घपदप्राप्तये अर्घ्यं निर्वपामीति स्वाहा ॥९॥

ज्ञानोपयोगविमलं विशदात्मरूपं सूक्ष्मस्वभावपरमं यदनन्तवीर्यम् ।
कर्मौघकक्षदहनं सुखशस्यबीजं वन्दे सदा निरुपमं वरसिद्धचक्रम्॥१०॥

ॐ ह्रीं सिद्धचक्राधिपतये सिद्ध परमेष्ठिने महार्घ्यं निर्वपामीति स्वाहा ॥ १० ॥

त्रैलोक्येश्वरवन्दनीयचरणाः प्रापुः श्रियं शाश्वतीं
यानाराध्य निरुद्धचण्डमनसः सन्तोऽपि तीर्थङ्कराः ।
सत्सम्यक्त्वविबोधवीर्य्यविशदाव्याबाधताद्यैर्गुणै-
र्युक्तांस्तानिह तोष्टवीमि सततं सिद्धान् विशुद्धोदयान् ॥११॥

( पुष्पांजलिं क्षिपेत् ) ।

## जयमाला ।

विराग सनातन शान्त निरंश । निरामय निर्भय निर्मल हंस ॥
सुधाम विबोधनिधान विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ १ ॥
विदूरितसंसृतभाव निरंग । समामृतपूरित देव विसङ्ग ॥
अबन्ध कषायविहीन विमोह । प्रसीद विशुद्ध सुसिद्ध समूह ॥ २ ॥

निवारितदुष्कृतकर्मविपाश । सदामलकेवलकेलिनिवास ॥
भवोदधिपारग शान्त विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ ३ ॥
अनन्तसुखामृतसागर धीर । कलङ्करजोमलभूरिसमीर ॥
विखण्डितकाम विराम विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ ४ ॥
विकारविवर्जित तर्जितशोक । विबोधसुनेत्रविलोकितलोक ॥
विहार विराव विरङ्ग विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ ५ ॥
रजोमल खेदविमुक्त विगात्र । निरन्तर नित्य सुखामृतपात्र ॥
सुदर्शनराजित नाथ विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ ६ ॥
नरामरवन्दित निर्मलभाव । अनन्तमुनिश्वरपूज्य विहाव ॥
सदोदय विश्वमहेश विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ ७ ॥
विदम्भ वितृष्ण विदोष विनिद्र । परापरशंकर सार वितन्द्र ॥
विकोप विरूप विशङ्क विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ ८ ॥
जरामरणोज्झित वीतविहार । विचिन्तित निर्मल निरहङ्कार ॥
अचिन्त्यचरित्र विदर्प विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ ९ ॥
विवर्ण विगन्ध विमान विलोभ । विमानविकाय विशब्द विशोभ ॥

अनाकुल केवल सार्व विमोह । प्रसीद विशुद्ध सुसिद्धसमूह ॥ १० ॥

असमयसमयसारं चारुचैतन्यचिह्नं परपरणतिमुक्तं पद्मनन्दीन्द्रवन्द्यम् ॥
निखिलगुणनिकेतं सिद्धचक्रं विशुद्धं स्मरति नमति यो वा स्तौति सोऽभ्येति मुक्तिम् ॥

ॐ ह्रीं सिद्धपरमेष्ठिभ्यो महार्घ्यं निर्वपामीति स्वाहा ।

अडिल्ल छन्द ।

अविनाशी अविकार परमरसधाम हो, समाधान सर्वज्ञ सहज अभिराम हो ।
शुद्धबोध अविरुद्ध अनादि अनंत हो, जगतशिरोमणि सिद्धसदा जयवंत हो ।
ध्यान अगनिकर कर्मकलंक सबै दहे, नित्य निरंजनदेव सरूपी होरहे ॥
ज्ञायकके आकार ममत्वनिवारिकैं, सो परमातम सिद्ध नमूं सिरनायकैं॥

दोहा—अविचलज्ञानप्रकाशिते, गुण अनन्तकी खान ।
ध्यान धरेसौं पाइये, परमसिद्ध भगवान ॥ ३ ॥

इत्याशीर्वादः ( पुष्पांजलिं क्षिपेत् )

---

# सिद्धपूजाका भावाष्टक।

निजमनोमणिभाजनभारया समरसैकसुधारसधारया।
सकलबोधकलारमणीयकं सहजसिद्धमहं परिपूजये॥ १॥ जलम्।
सहजकर्मकलङ्कविनाशनैरमलभावसुवासितचन्दनैः।
अनुपमानगुणावलिनायकं सहजसिद्धमहं परिपूजये॥ २॥ चन्दनम्।
सहजभावसुनिर्मलतन्दुलैः सकलदोषविशालविशोधनैः।
अनुपरोधसुबोधनिधानकं सहजसिद्धमहं परिपूजये॥ ३॥ अक्षतान्।
समयसारसुपुष्पसुमालया सहजकर्मकरेण विशोधया।
परमयोगबलेन वशीकृत सहजसिद्धमहं परिपूजये॥ ४॥ पुष्पम्।
अकृतबोधसुदिव्यनिवेद्यकैर्विहितजातजरामरणान्तकैः।
निरवधिप्रचुरात्मगुणालयं सहजसिद्धमहं परिपूजये॥ ५॥ नैवेद्यम्।
सहजरत्नरुचिप्रतिदीपकैः रुचिविभूतितमः प्रविनाशनैः।
निरवधिस्वविकाशविकाशनैः सहजसिद्धमहं परिपूजये॥ ६॥ दीपम्।
निजगुणाक्षयरूपसुधूपकैः स्वगुणघातिमलप्रविनाशनैः।
विशदबोधसुदीर्घसुखात्मकं सहजसिद्धमहं परिपूजये॥ ७॥ धूपम्।

परमभावफलावलिसम्पदा सहजभावकुभावविशोधया ।
निजगुणाऽऽस्फुरणात्मनिरञ्जनं सहजसिद्धमहं परिपूजये ॥ ८ ॥ फलम् ।
नेत्रोन्मीलिविकाशभावनिवहैरत्यन्तबोधाय वै
वार्गन्धाक्षतपुष्पदामचरुकैः सद्दीपधूपैः फलैः ।
यश्चिन्तामणिशुद्धभावपरमज्ञानात्मकैरर्चत्
सिद्धं स्वादुमगाधबोधमचलं संचर्चयामो वयम् ॥ ६ ॥ अर्घ्यम् ।

## सोलहकारणका अर्घ ।

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः ।
धवलमङ्गलगानरवाकुले जिनगृहे जिनहेतुमहं यजे ॥ १ ॥
ॐ ह्रीं दर्शनविशुद्ध्यादिषोडशकारणेभ्यो अर्घ्यं निर्वपामीति स्वाहा ॥ १ ॥

## दशलक्षणधर्मका अर्घ ।

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः ।
धवलमङ्गलगानरवाकुले जिनगृहे जिनधर्ममहं यजे ॥ २ ॥

ॐ ह्रीं अर्हन्मुखकमलसमुद्भूतोत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिञ्चन्यब्रह्म-
चर्यदशलाक्षणिकधर्मेभ्यो अर्घ्यं निर्वपामीति स्वाहा ॥ २ ॥

## रत्नत्रयका अर्घ।

उदकचन्दनतन्दुलपुष्पकैश्चरुसुदीपसुधूपफलार्घकैः।
धवलमङ्गलगानरवाकुले जिनगृहे जिनरत्नमहं यजे॥ ३ ॥

ॐ ह्रीं अष्टाङ्गसम्यग्दर्शनाय अष्टविधसम्यग्ज्ञानाय त्रयोदशप्रकारसम्यक्चारित्राय अर्घ्यं निर्वपामीति स्वाहा ॥ ३ ॥

## पञ्चपरमेष्ठिजयमाला।

मणुय-णाइन्द-सुरधरियछत्तत्तया। पंचकल्लाणसुक्खावलीपत्तया ॥
दंसणं णाण झाणं अणंतं बलं। ते जिणा दिन्तु अम्हं वरं मङ्गलं ॥ १ ॥
जेहिं झाणग्गिवाणेहि अइथड्डयं। जम्मजरमरणणयरत्तयं दड्ढयं ॥
जेहिं पत्तं सिवं सासयं ठाणयं। ते महा दिन्तु सिद्धाः वरं णाणयं ॥ २ ॥
पञ्चहाचारपञ्चग्गिसंसाहया। बारसंगाइं सुयजलहिं अवगाहया ॥
मोक्खलच्छी महन्ती महं ते सया। सूरिणो दिन्तु मोक्खं गया संगया ॥ ३ ॥

घोरसंसारभीमाडवीकाणणे। तिक्खवियरालणहपाव पञ्चाणणे।
णट्ठमग्गाण जीवाण पहदेसया। वंदिमो ते उवज्झाय अम्हे सया ॥ ४ ॥
उग्गतवचरणकरणेहिं झीणं गया। धम्मवरझाणसुक्कज्झाणं ( ? ) गया।
णिब्भरं तवसिरीए समालिंगया। साहओ ते महामोक्खपहमग्गया ॥ ५ ॥
एणथोत्तेण जो पञ्चगुरु वन्दए। गुरुयसंसारघणवेल्लि सो छिन्दए ॥
लहइ सो सिद्धसुक्खाइ वरमाणणं। कुणइ कम्मिंधणं पुञ्ज पज्जालणं ॥ ६ ॥
आर्या—अरुहा सिद्धाइरिया, उवझाया साहु पञ्चपरमेट्ठी।
एयाण णमुक्कारो, भवे भवे मम सुहं दिन्तु ॥ १ ॥

ॐ ह्रीं अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुपञ्चपरमेष्ठिभ्योऽर्घ्यं महार्घ्यं निर्वपामीति स्वाहा।

इच्छामि भन्ते पञ्चगुरुभत्ति काओसग्गो कओ। तस्सालोचेओ अट्ठमहापाडिहेरसंजुत्ताणं अरहन्ताणं। अट्ठगुणसंपण्णाणं उड्ढलोयम्मि पइट्ठियाण सिद्धाणं। अट्ठपवयणमाउसंजुत्ताणं आयरियाणं। आयारादिसुदणाणोवदेसयाणं उवज्झायाणं। तिरयणगुणपालणरयाणं सव्वसाहूणं। णिच्चकालं अच्चेमि पूजेमि वन्दामि नमस्सामि। दुःक्खक्खओ कम्मक्खओ बोहिलाहो सुगइगमणं समाहिमरण जिणगुणसंपत्ति होउ मज्झं।

इत्याशीर्वादः। ( पुष्पांजलि क्षिपेत् )

# शान्तिपाठः ।

[ शान्तिपाठ पढ़ते समय दोनों हाथोंसे पुष्पवृष्टि करते रहना चाहिये। ]

शान्तिजिनं शशिनिर्मलवक्त्रं शीलगुणव्रतसंयमपात्रम् ।
अष्टशतार्च्चितलक्षणगात्रं नौमि जिनोत्तमममम्बुजनेत्रम् ॥ १ ॥

पञ्चममीप्सितचक्रधराणां पूजितमिन्द्रनरेन्द्रगणैश्च ।
शान्तिकरं गणशान्तिमभीप्सुः षोडशतीर्थकरं प्रणमामि ॥ २ ॥

दिव्यतरुः सुरपुष्पसुवृष्टिर्दुन्दुभिरासनयोजनघोषौ ।
आतपवारणचामरयुग्मे यस्य विभाति च मण्डलतेजः ॥ ३ ॥

तं जगदर्चितशान्तिजिनेन्द्रं शान्तिकरं शिरसा प्रणमामि ।
सर्वगणाय तु यच्छतु शान्तिं मह्यमरं पठते परमां च ॥ ४ ॥

वसन्ततिलका ।

येऽभ्यर्चिता मुकुटकुण्डलहाररत्नैः शक्रादिभिः सुरगणैः स्तुतपादपद्माः ।
ते मे जिनाः प्रवरवंशजगत्प्रदीपास्तीर्थङ्कराः सततशान्तिकरा भवन्तु ॥ ५ ॥

इन्द्रवज्रा ।

संपूजकानां प्रतिपालकानां यतीन्द्रसामान्यतपोधनानाम् ।
देशस्य राष्ट्रस्य पुरस्य राज्ञः करोतु शांतिं भगवान् जिनेन्द्रः ॥ ६ ॥

स्रग्धरावृत्तम् ।

क्षेमं सर्वप्रजानां प्रभवतु बलवान् धार्मिको भूमिपालः ।
काले काले च सम्यग्वर्षतु मघवा व्याधयो यान्तु नाशम् ॥
दुर्भिक्षं चौरमारी क्षणमपि जगतां मास्मभूज्जीवलोके ।
जैनेन्द्रं धर्मचक्रं प्रभवतु सततं सर्वसौख्यप्रदायि ॥ ७ ॥

अनुष्टुप्—प्रध्वस्तघातिकर्माण केवलज्ञानभास्कराः ।
कुर्वन्तु जगतः शान्तिं वृषभाद्या जिनेश्वराः ॥ ८ ॥

प्रथमं करणं चरणं द्रव्यं नमः ।

शास्त्राभ्यासो जिनपतिनुतिः सङ्गतिः सर्वदार्यैः
सद्वृत्तानां गुणगणकथा दोषवादे च मौनम् ॥ ९ ॥
सर्वस्यापि प्रियहितवचो भावना चात्मतत्त्वे
सम्पद्यन्तां मम भवभवे यावदेतेऽपवर्गः ॥ १० ॥

आर्यावृत्तम् ।

तव पादौ मम हृदये मम हृदयं तव पदद्वये लीनम् ।

तिष्ठतु जिनेन्द्र तावद्यावन्निर्वाणसम्प्राप्तिः ॥ ११ ॥

आर्या ।

अक्खरपयत्थहीणं मत्ताहीणं च जं मए भणियं ।
तं खमउ णाणदेव य मज्झवि दुःक्खक्खयं दिन्तु ॥ १२ ॥
दुक्खखओ कम्मखओ समाहिमरणं च बोहिलाहोय ।
मम होउ जगतबंधव तव जिणवर चरणसरणेण ॥ १३ ॥

( परिपुष्पांजलिं क्षिपेत् )

विसर्जन ।

ज्ञानतोऽज्ञानतो वापि शास्त्रोक्तं न कृतं मया ।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादाज्जिनेश्वर ॥ १ ॥
आह्वानं नैव जानामि नैव जानामि पूजनम् ।
विसर्जनं न जानामि क्षमस्व परमेश्वर ॥ २ ॥
मंत्रहीनं क्रियाहीनं द्रव्यहीनं तथैव च ।

तत्सर्वं क्षम्यतां देव रक्ष रक्ष जिनेश्वर ॥ ३ ॥
आहूता ये पुरा देवा लब्धभागा यथाक्रमम् ।
ते मयाभ्यर्चिता भक्त्या सर्वे यान्तु यथास्थितिम् ॥ ४ ॥

नित्यपूजाविधानं समाप्तम् ।

## भाषास्तुति पाठ—

तुम तरनतारन भवनिवारन, भविकमनआनंदनो ।
श्रीनाभिनन्दन जगतवन्दन, आदिनाथ निरञ्जनो ॥ १ ॥
तुम आदिनाथ अनादि सेऊं, सेय पदपूजा करूं ।
कैलासगिरिपर रिषभजिनवर, पदकमल हिरदै धरूं ॥ २ ॥
तुम अजितनाथ अजीत जीते, अष्टकर्म महाबली ।
यह विरद सुनकर सरन आयो, कृपा कीजे नाथजो ॥ ३ ॥
तुम चन्द्रवदन सु चन्द्रलच्छन, चन्द्रपुरिपरमेश्वरो ।
महासेननन्दन, जगतवंदन, चन्द्रनाथ जिनेश्वरो ॥ ४ ॥
तुम शांति पाँच कल्याण पूजों, सुद्धमनवचकायजू ।
दुर्भिक्ष चोरीपापनाशन, विघन जाय पलायजू ॥ ५ ॥
तुम बालब्रह्म विवेकसागर, भव्यकमलविकाशनो ।
श्रीनेमिनाथ पवित्र दिनकर, पापतिमिर विनाशनो ॥ ६ ॥

जिन तजी राजुल राजकन्या, कामसैन्या वश करी ।
चारित्ररथ चढ़ि भये दूलह, जाय शिवरमणी वरी ॥ ७ ॥
कंदर्प दर्प सुसर्पलक्षण, कमठ शठ निर्मद कियो ।
अश्वसेननन्दन जगतवन्दन, सकलसंघ मंगल कियो ॥ ८ ॥
जिन धरी बालकपणे दीक्षा, कमठमानविदारकैं ।
श्रीपार्श्वनाथ जिनेन्द्रके पद, मैं नमो सिरधारकैं ॥ ९ ॥
तुम कर्मघाता मोक्षदाता, दीन जानि दया करो ।
सिद्धार्थनन्दन, जगतवन्दन महावीर जिनेश्वरो ॥ १० ॥
त्रय छत्र सोहैं सुर नर मोहैं, वीनती अवधारिये ।
कर जोडि सेवक वीनवैं प्रभु, आवागमन निवारिये ॥ ११ ॥
अब होऊ भव भव स्वामि मेरे, मै सदा सेवक रहौं ।
कर जोड यों वरदान मांगों, मोक्षफल जावत लहौं ॥ १२ ॥
जो एकमाहीं एक राजै, एकमाहीं अनेकनो ।
इक अनेककी नहीं संख्या, नमों सिद्धनिरंजनो ॥ १३ ॥
मैं तुम चरणकमलगुणगाय । बहुविध भक्ति करी मन लाय ॥
जनम जनम प्रभु पाऊं तोहि। यह सेवाफल दीजे मोहि ॥ १४ ॥
कृपा तिहारी ऐसी होय । जामन मरन मिटावो मोय ।
बार बार मैं विनती करूं । तुम सेये भवसागर तरूं ॥ १५ ॥
नाम लेत सब दुःख मिट जाय । तुम दर्शन देख्यो प्रभु आय ।

तुम हो प्रभु देवनके देव। मैं तो करूं चरण तव सेव ॥ १६ ॥
मैं आयो पूजनके काज। मेरो जन्म सफल भयो आज।
पूजा करकैं नवाऊं शीस। मुझ अपराध क्षमहु जगदीस ॥ १७ ॥

दोहा—सुख देना दुख मेटना, यही तुम्हारी बान।
मो गरीबकी बीनती, सुन लीज्यो भगवान ॥ १८ ॥
दर्शन करते देवका, आदि मध्य अवसान।
स्वर्गनके सुख भोगकर, पावै मोक्ष निदान ॥ १९ ॥
जैसी महिमा तुमविषै, और धरै नहीं कोय।
जो सूरजमें ज्योति है, तारनमें नहिं सोय ॥ २० ॥
नाथ तिहारे नामतैं, अघ छिनमांहिं पलाय।
ज्यों दिनकर परकाशतैं, अंधकार विनशाय ॥ २१ ॥
बहुत प्रशंसा क्या करूं, मैं प्रभु बहुत अजान।
पूजाविधि जानूं नहीं, सरन राखि भगवान ॥ २२ ॥

# अथ देवपूजा।

दोहा—प्रभु तुम राजा जगतके, हमें देय दुःख मोह।
तुम पद पूजा करतहूं, हमपै करुना होहि॥ १॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेन्द्रभगवन् अत्र अवतरावतर संवौषट्। ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेन्द्रभगवन अत्र तिष्ठ तिष्ठ। ठः ठः। ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेन्द्रभगवन् अत्र मम सन्निहितो भवभव। वषट्।

छंद त्रिभंगी।

बहु तृषा सतायो, अति दुख पायो, तुमपै आयो जल लायो।
उत्तम गङ्गाजल, शुचि अति शीतल, प्रासुक निर्मल, गुन गायो॥
प्रभु अन्तरजामी, त्रिभुवननामी, सबके स्वामी दोष हरो।
यह अरज सुनीजे, ढील न कीजे, न्याय करीजे, दया धरो॥ १॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहित श्रीजिनेंद्रभगवद्भ्यो जन्ममृत्युविनाशनाय जलं

अघतपत निरन्तर, अगनिपटन्तर, मो उर अंतर, खेदकरचौ ।
लै बावन चन्दन, दाहनिकंदन, तुमपदवन्दन, हरष धरचौ ॥ प्रभु० ॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेभ्यो भवतापनाशाय चन्दनं नि०

औगुन दुखदाता, कह्यौ न जाता, मोहि असाता बहुत करै ।
तन्दुल गुनमण्डित, अमल अखण्डित, पूजत पंडित, प्रीति धरै ॥ प्र०

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेभ्यो अक्षयपदप्राप्तये अक्षतान् नि०

सुरनर पशुको दल, काम महाबल, बात कहत छल, मोहि लिया ।
ताकेशर लाऊं फूल चढ़ाऊं, भगति बढ़ाऊं खोल हिया ॥ प्रभु० ॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेभ्यो कामबाणविध्वंसनाय पुष्पं नि०

सब दोषनमाहीं, जासम नाहीं, भूख सदा ही मो लागै ।
सद घेवर बावर, लाडू, बहुत धर, थार कनक भर, तुम आगै ॥ प्रभु०

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेभ्यो क्षुधारोगनाशाय नैवेद्यं नि०॥

अज्ञान महातम, छाय रह्यो मम, ज्ञान ढक्यो हम, दुःख पावैं ।

तम मेटनहारा, तेज अपारा, दीप संवारा जस गावैं ॥ प्रभु० ॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेभ्यो मोहान्धकारविनाशाय दीपं ।

इह कर्म महावन, भूल रह्यौ जन, शिवमारग नहिं पावत है ।
कृष्णागरुधूपं, अमलअनूपं, सिद्धस्वरूपं, ध्यावत है ॥
प्रभु अन्तरजामी, त्रिभुवननामी, सबके स्वामी, दोष हरो ।
यह अरज सुनीजै, ढील न कीजै, न्याय करीजै, दया धरो ॥ ७ ॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेभ्यो अष्टकर्मदहनाय धूपं० ॥

सबतैं जोरावर, अन्तराय अरि, सुफल विघन करि डारत हैं ।
फलपुञ्ज विविध भर, नयनमनोहर, श्रीजिनवर पद धारत हैं ॥ प्रभु० ॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेभ्यो मोक्षफलप्राप्तये फलं० ॥

आठौं दुःखदानी, आठ निशानी, तुम ढिग आनी वारन हो ।
दीननिस्तारन, अधमउधारन, 'द्यानत' तारन, कारन हो ॥ प्र० ॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहित श्रीजिनेंद्रभगवद्भ्योऽनर्घ्यपदप्राप्तये अर्घ्यं

जयमाला—

दोहा—गुण अनन्त को कहि सकै, छियालीस जिनराय ।
प्रगट सुगुन गिनती कहूं, तुम ही होहु सहाय ॥ १ ॥

चौपाई ( १६ मात्रा । )

एक ज्ञान केवल जिनस्वामी। दो आगम अध्यातम नामी ॥
तीन काल विधि परगट जानी। चार अनन्तचतुष्टय ज्ञानी ॥ २ ॥
पञ्च परावर्तन परकासी । छहों दरवगुनपरजयभासी ॥
सातभंगवानी परकाशक । आठों कर्म महारिपुनाशक ॥ ३ ॥
नव तत्त्वनके भाखनहारे । दश लच्छनसों भविजन तारे ।
ग्यारह प्रतिमाके उपदेशी । बारह सभा सुखी अकलेशी ॥ ४ ॥
तेरहविधि चारितके दाता । चौदह मारगनाके ज्ञाता ।
पन्द्रह भेद प्रमादनिवारी । सोलह भावन फल अविकारी ॥ ५ ॥

तारे सत्रह अंक भरत भुव। ठारे थान दान दाता तुव।
भाव उनीस जु कहे प्रथम गुन। वीस अंक गणधरजीकी धुन ॥ ६ ॥
इकइस सर्वघात विधि जानै। बाइस विध नवमै गुणथानै ॥
तेइस निधि अरु रतन नरेश्वर। सो पूजै चौवीस जिनेश्वर ॥ ७ ॥
नाश पचीस कषाय करी हैं। देशघाति छब्बीस हरी हैं ॥
तत्व दरव सत्ताइस देखे। मति विज्ञान अठाइस पेखे ॥ ८ ॥
उनतिस अंक मनुष सब जाने। तीस कुलाचल सर्व बखाने ॥
इकतिस पटल सुधर्म निहारे। बत्तिस दोष समाइक टारे ॥ ९ ॥
तेतिस सागर सुखकर आये। चौंतिस भेद अलब्धी बताये ॥
पंतिस अक्षर जप सुखदाई। छत्तिस कारन रीति मिटाई ॥ १० ॥
संतिस मग कहि ग्यारह गुनमें। अड़तिस पद लहि नरक अपुनमें ॥
उनतालीस उदीरन तेरम। चालिस भवन इन्द्र पूजैं नम ॥ ११ ॥

इकतालीस भेद आराधन। उदै बियालीस तीर्थंकर भन ॥
तेतालीस बन्ध ज्ञाता नहिं। द्वार चवालिस नर चौथेमहिं ॥ १२ ॥
पैंतालीस पल्यके अच्छर। छियालीस विन दोष मुनीश्वर ॥
नरक उदै न छियालीसमुनिधुन। प्रकृति छियालीस नाश दशमगुन ॥
छियालीसघन राजु सात भुव। अङ्क छियालीस सरसों कहि कुव ॥
भेद छियालीस अन्तर तपवर। छियालीस पूरन गुन जिनवर ॥ १४ ॥

अडिल्ल—मिथ्या-तपन-निवारण चन्द समान हो।
मोहतिमिर वारनको कारन भान हो ॥
काल कषाय मिटावन मेघ मुनीश हो।
'द्यानत सम्यकरतनत्रय गुनईस हो ॥ १५ ॥

ॐ ह्रीं अष्टादशदोषरहितषट्चत्वारिंशद्गुणसहितश्रीजिनेन्द्रभगवद्भ्यो पूर्णार्घ्यं निर्वपा०

## अथ सरस्वतीपूजा ।

दोहा—जनम जरा मृतु छय करै, हरै कुनय जड़रीति ।
भवसागरसों ले तिरै, पूजै जिनवचप्रीति ॥ १ ॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतिवाग्वादिनि ! अत्र अवतर अवतर । संवौषट् । अत्र तिष्ठ तिष्ठ । ठः ठः अत्र मम सन्निहितो भव भव । वषट् ।

त्रिभंगी ।

छीरोदधि गंगा, विमल तरंगा, सलिल अभंगा, सुखशंगा ।
भरि कंचन झारी, धार निकारी, तृषा निवारी, हित चंगा ॥
तीर्थंकरकी धुनि, गणधरने सुनि, अङ्ग रचे चुनि, ज्ञानमई ।
सो जिनवरवानी, शिवसुखदानी, त्रिभूवन मानी, पूज्य भई ॥ १ ॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वती देव्यै जलं निर्वपामीति स्वाहा ।

करपूर मंगाया, चन्दन आया, केसर लाया, रंग भरी ।
शारदपद वंदौं, मन अभिनन्दौं, पापनिकंदौं, दाहहरी ॥तीर्थं० ॥ २ ॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै चन्दनं निर्वपामीति स्वाहा ॥ २ ॥

सुखदास कमोदं, धारकमोदं, अतिअनुमोदं चंदसमं ।
बहुभक्ति बढ़ाई, कीरति गाई, होहु सहाई, मात ममं ॥ तीर्थं० ॥ ३ ॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै अक्षतान् निर्वपा० ॥ ३ ॥

बहुफूलसुवासं; विमलप्रकाशं, आनंदरासं लाय धरे ।
मम काम मिटायौ, शील बढ़ायौ, सुख उपजायौ, दोष हरे॥तीर्थं०॥४॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै पुष्पं निर्वपा० ॥ ४ ॥

पकवान बनाया, बहुघृत लाया, सब विध भाया, मिष्ट महा ।
पूजूं थुति गाऊं, प्रीति बढ़ाऊं, क्षुधा नसाऊं, हर्ष लहा ॥ तीर्थं० ॥ ५ ॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वती देव्यै नैवेद्यं निर्वपा० ॥ ५ ॥

करि दीपक ज्योतं, तमछय होतं, ज्योति उदोतं, तुमहिं चढ़ै ।
तुमहो परकाशक,भरमविनाशक,हम घट भासक,ज्ञान बढ़ै ॥तीर्थं॥ ६ ॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै दीपं निर्वपा० ॥ ६ ॥

शुभगंध दशांकर, पात्रकमें धर, धूप मनोहर, खेवत हैं ।
सब पाप जलावैं पुण्य कमावैं, दास कहावैं, सेवत हैं ॥ तीर्थं० ॥ ७ ॥
ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै धूपं निर्वपा० ॥ ७ ॥
बादाम छुहारी, लौंग सुपारी, श्रीफल भारी, ल्यावत हैं ।
मनवांछित दाता, मेट असाता, तुम गुन माता, ध्यावत हैं ॥तीर्थं०॥८॥
ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै फलं निर्वपा० ॥ ८ ॥
नयननिसुखकारी, मृदुगुनधारी, उज्वल भारी, मोल धरै ।
शुभगंधसम्हारा, वसन निहारा, तुमतर धारा ज्ञान करै ॥
तीर्थङ्करकी धुनि, गणधरने सुनि, अङ्ग रचे चुनि, ज्ञानमई ।
सो जिनवरवानी, शिवसुखदानी, त्रिभुवनमानी, पूज्य भई ॥ ९ ॥
ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै अर्घं निर्वपा० ॥ ९ ॥
जल चंदन अच्छत, फूल चरू चत, दीप धूप अति, फल लावै ।
पूजाको ठानत, जो तुम जानत, सो नर द्यानत, सुख पावै । तीर्थं०॥१०॥
ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वतीदेव्यै अर्घं निर्वपा० ॥ १० ॥

अथ जयमाला ।

सोरठा—ओंकार धुनिसार, द्वादशांग वाणी विमल ।
नमो भक्ति उरधार, ज्ञान करै जड़ता हरै ॥

वेसरी ।

पहला आचारांग बखानो । पद अष्टादश सहस प्रमानो ।
दूजा सूत्रकृतं अभिलाषं । पद छत्तीस सहस गुरुभाषं ॥ १ ॥
तीजा ठाना अङ्ग सुजानं । सहस बियालिस पदसरधानं ।
चौथा समवायां निहारं । चौसठ सहस लाख इकधारं ॥ २ ॥
पंचम व्याख्याप्रगपति दरशं । दोय लाख अट्ठाइस सहसं ।
छट्ठा ज्ञातृकथा विसतारं । पांचलाख छप्पन हज़ारं ॥ ३ ॥
सप्तम उपासकाध्ययनंगं । सत्तर सहस ग्यार लख भंगं ।
अष्टम अन्तकृतं दस ईसं । सहस अठाइस लाख तेईसं ॥ ४ ॥
नवम अनुत्तरदश सुविशालं । लाख बानवै सहस चवालं ।

दशम प्रश्न व्याकरण विचारं। लाख तिरावन सोल हजारं ॥ ५ ॥
ग्यारम सूत्रविपाक सु भाखं। एक कोड़ चौरासी लाखं।
चार कोड़ि अरु पंद्रह लाखं। दो हजार सब पद गुरुशाखं ॥ ६ ॥
द्वादश दृष्टिवाद पन भेदं। इकसौ आठ कोड़ि पन वेदं।
अड़सठ लाख सहस छप्पन हैं। सहित पंचपद मिथ्या हन हैं ॥ ७ ॥
इक सौ बारह कोड़ि बखानो। लाख तिरासी ऊपर जानो ।
ठावन सहस पंच अधिकाने। द्वादश अङ्ग सर्व पद माने ॥ ८ ॥
कोड़ि इकावन आठ हि लाखं। सहस चुरासी छहसौ भाखं।
साढ़े इकीस शिलोक बताये। एक एक पदके ये गाये ॥ ९ ॥

घत्ता— जा बानीके ज्ञानमें, सूझै लोक अलोक।
'द्यानत' जग जयवंत हो, सदा देत हों धोक ॥ १ ॥

ॐ ह्रीं श्रीजिनमुखोद्भवसरस्वत्यै देव्यै पूर्णार्घ्यं निर्वपा० ।

इति सरस्वती पूजा ।

# गुरुपूजा

दोहा—चहुं गति दुखसागरविषैं, तारनतरन जिहाज।
रतनत्रयनिधि नगन तन, धन्य महा मुनिराज ॥१॥

ॐ ह्रीं श्रीआचार्योपाध्यायसर्वसाधुगुरुसमूह ! अत्रावतरावतर । संवौषट् ।

ॐ ह्रीं श्रीआचार्योपाध्यायसर्वसाधुगुरुसमूह ! अत्र तिष्ठ तिष्ठ ठः ठः ।

ॐ ह्रीं श्रीआचार्योपाध्यायसर्वसाधुगुरुसमूह ! अत्र मम सन्निहितो भव भव । वषट् ।

गीता छन्द ।

शुचि नीर निरमल क्षीरदधिसम, सुगुरु चरन चढ़ाइया ।
तिहुं धार तिहुं गद टार स्वामी, अति उछाह चढ़ाइया ॥
भवभोगतनवैराग धार, निहार शिव तप तपत हैं ।
तिहुं जगतनाथ अधार साधु सु. पूज नित गुन जपत हैं ॥ १ ॥

ॐ ह्रीं श्रीआचार्योपाध्यायसर्वसाधुगुरुभ्यो जलं नि० ॥ १ ॥

करपूर चन्दन सलिलसौं घसि, सुगुरुपद पूजा करों ।

सब पाप ताप मिटाय स्वामी, धरम शीतल विस्तरों ।
भवभोगतनवैराग धार निहार, शिवतप तपत हैं ।
तिहुं जगतनाथ अराध साधु सु, पूज नित गुन जपत हैं ॥ २ ॥

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्यो भवतापविनाशनाय चन्दनं नि० ॥

तन्दुल कमोद सुवास उज्जल, सुगुरु पगतर धरत हैं ।
गुनकार औगुनहार स्वामी, वंदना हम करत हैं ॥ भव भो०॥३॥

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्योऽक्षयपदप्राप्तये अक्षतान् नि० ॥

शुभफूलरासप्रकाश परिमलसुगुरुपायंनि परत हों ।
निरवार मार उपाधि स्वामी, शील दिढ़ उर धरत हों ॥भव० ॥४॥

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्यः कामबाणविध्वंसनाय पुष्पं नि० ॥ ४ ॥

पकवान मिष्ट सलोन सुन्दर, सुगुरु पायंन प्रीतिसों ।
कर क्षुधारोग विनाश स्वामी, सुथिर कीजे रीतिसौं ॥ भव० ॥ ५ ॥

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्यः क्षुधारोगविनाशनाय नैवेद्यं नि० ।

दीपक उदोत सजोत जगमग, सुगुरुपद पूजों सदा ।
तमनाश ज्ञानउजास स्वामी, मोंहि मोह न हो कदा ॥ भव० ॥६॥
ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्यो मोहान्धकारविनाशनाय दीपं नि० ।
बहु अगर आदि सुगंध खेऊं, सुगुण पद पद्महिं खरे ।
दुख पुञ्ज काट जलाय स्वामी, गुण अछय चित्तमें धरे ॥भव० ।७।
ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्योऽष्टकर्मदहनाय धूपं निर्वपा० ॥ ७ ॥
भर थार पूर बदाम बहुविधि, सुगुरुक्रम आगें धरों ।
मंगल महाफल करो स्वामी, जोर कर विनती करों ॥ भव०॥८॥
ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्यो मोक्षफलप्राप्तये फलं निर्व० ॥ ८ ॥
जल गंध अच्छत फूल नेवज, दीप धूप फलावली ।
'द्यानत, सुगुरुपद देहु स्वामी, हमहिं तार उतावली ॥ भव० ॥ ९ ॥
ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्योऽनर्घपदप्राप्ताय अर्घ्यं नि० ॥ ९ ॥

अथ जयमाला ।

अथ जयमाला ।

दोहा—कनककामिनी विषयवश, दीसे सब संसार ।
त्यागी वैरागी महा, साधु सुगुन भंडार ॥ १ ॥
तीन घाटि नवकोड़ सब, वंदों सीस नवाय ।
गुन तिन अट्ठाईस लों, कहूं आरती गाय ॥ २ ॥

छंद वेसरी ।

एक दया पालैं मुनिराज, रागद्वेष द्वै हरन परं ।
तीनों लोक प्रगट सब देखैं, चारौं आराधननिकरं ॥
पंच महाव्रत दुद्धर धारैं, छहों दरब जानैं सुहितं ।
सात भंगवानी मन लावैं, पावैं आठ रिद्ध उचितं ॥ ३ ॥
नवों पदारथ विधिसौं भाखैं, बंध दशौं चूरन करनं ।
ग्यारह शंकर जानै मानै, उत्तम बारह व्रत धरनं ॥
तेरहभेद काठिया चूरे, चौदह गुनथानक लखियं ।

महाप्रमाद पंचदश नाशे, सोल कषाय सबै नखियं ॥ ४ ॥
बंधादिक सत्रह सूतर लख, ठारह जन्म न मरन मुनं ।
एक समय उनईस, परीषह, बीस प्ररूपनिमें निपुनं ॥
भाव उदीक इकीसों जानै, बाइस अभख न त्याग करं ।
अहिमिंद्र तेईसों बंदै, इन्द्र सुरग चौबीस वरं ॥ ५ ॥
पच्चीसौं भावन नित भावै, छव्विस अङ्गउपंग पढ़ैं ।
सत्ताईसों विषय विनाशैं, अठाईसौं गुण सु बढ़ैं ॥
शीतसमय सर चौपथवासी; ग्रीषमगिरिसिर जोग धरैं ।
वर्षा वृक्षतरैं थिर ठाढे, आठ करम हनि सिद्धि वरैं ॥ ६ ॥
दोहा—कहों कहां लों भेद मैं, बुध थोरी गुण भूर ।
'हेमराज' सेवकहृदय, भक्ति भरो भरपूर ॥ ७ ॥

ॐ ह्रीं आचार्योपाध्यायसर्वसाधुगुरुभ्यो अर्घ्यं निर्व०

इति गुरुपूजा समाप्त ।

